नेत्ररोगों की संख्या—

तथा नेत्रभवाः ख्याताश्चतुर्नवतिरामयाः ।
तेषु वर्त्मगदाः प्रोक्ताश्चतुर्विंशतिसंज्ञकाः ॥१५३॥
कृच्छ्रोन्मीलः पक्ष्मपातः कफोत्क्लिष्टश्च लोहितः ।
अरुद्धनिमेषः कथितो रक्तोत्क्लिष्टः कुकूणकः ॥१५४॥
पक्ष्मार्शः पक्ष्मरोधश्च पित्तोत्क्लिष्टश्च पोथकी ।
क्लिष्टवर्त्मा च बहलः पक्ष्मोत्सङ्गस्तथार्बुदम् ॥१५५॥
कुम्भिका सिकतावर्त्म लगणोऽञ्जननामिका ।
कर्दमः श्यावयर्त्मा च विसवर्त्मा तथाऽलजी ॥१५६॥
उत्क्लिष्टवर्त्मेति गदाः प्रोक्ता वर्त्मसमुद्भवाः ।

नेत्रों में होने वाले ६४ रोग होते हैं। उन में से २४ रोग वर्त्म (पलकों) में होते हैं। यथा—१—कृच्छ्रोन्मीलन (पलकों का कष्ट से खुलना), २—पक्ष्मपात (पलकों के बालों का गिर जाना), ३—कफोत्क्लिष्ट (पलकों में गीध का अधिक आना), ४—लोहितवर्त्म (पलकों का लाल होना), ५—अरुद्धनिमेष (पलकों का वार वार झपकना), ६—रक्तोत्क्लिष्टवर्त्म (रक्ताधिक्य से पलकों के ऊपर मासाकुरों की उत्पत्ति), ७—कुकूणक (माता के दूध के विकार से पलकों का भारी होना) ८—पक्ष्मार्श (पलकों पर अर्श के से अङ्कुरो का होना), ९—पक्ष्मरोध (पलकों के सूजने से देखने का अभाव), १०—पित्तोत्क्लिष्टवर्त्म (पलकों में दाह और पक्ष्मों का नाश होना) ११—पोथकी (कुकरों, रोहों का होना), १२—क्लिष्टवर्त्म (पलकों का परस्पर चिपकना), १३—बहलवर्त्म (पलकों के भीतर फुंसी होना) १४—पक्ष्मोत्सग (पलकों में अभ्यन्तरमुखी पिडिका) १५—पक्ष्मार्बुद (पलकों पर रसौली का होना), १६—कुम्भिका (कुम्भिका के बीजतुल्य पिडिका का होना) १७—सिकतावर्त्म (पलकों पर एक पिडिका के इतस्तत सूक्ष्म सूक्ष्म पिडिकाओं का होना), १८—लगण (पाक रहित कठिन और स्थूल सी गाठ का होना) १९—अञ्जननामिका (निहाली, पनिहारी, ग्वाडनी), २०—कर्दमवर्त्म (पलकों का गला सा होना), २१—श्याववर्त्म (पलकों का कृष्णवर्ण होना), २२—विसवर्त्म (सर्वदा स्रावयुक्त होना), २३—अलजी (पलकों की सन्धि में पिडिका का होना) २४—उत्क्लिष्टवर्त्म (पलकों की क्रियाशक्ति का अभाव) ॥१५३-१५६॥

वक्तव्य—इनके पृथक् पृथक् लक्षण इस प्रकार हैं।

१ कृच्छ्रोन्मीलन के लक्षण (कुञ्चन)—

वाताद्या वर्त्मसंकोचं जनयन्ति मला यदा ।
तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुः ॥

२ पक्ष्मशात के लक्षण—

वर्त्मपक्ष्माशयगतं पित्तं रोमाणि शातयेत् ।
कण्डूं दाहं च कुरुते पक्ष्मशातं तमादिशेत् ॥

३ कफोत्क्लिष्ट (प्रक्लिन्नवर्त्म)—

अरुजं बाह्यतः शून वर्त्म यस्य नरस्य हि ।
प्रक्लिन्नवर्त्म त विद्यात् क्लिन्नमत्यर्थमन्ततः ॥

४ लोहितवर्त्म (शुष्कार्श)—

दीर्घांकुर. खरः स्तब्धो दारुणो ह्यन्तरोद्भवः ।
व्याधिरेषोऽतिविख्यात. शुष्कार्श इति संज्ञितः ॥

५ अरुड्निमेष (निमेष)—

निमेषिणीः शिरा वायु प्रविष्टो वर्त्मसंश्रयः ।
चालयत्याक्षिवर्त्मानि निमेष इति तं विदु. ॥

६ लोहितवर्त्म (रक्तार्श)—

यः स्थितो वर्त्ममध्ये तु लोहितो मृदुरङ्कुरः ।
तद्रक्तजं शोणितार्शश्छिन्न भिन्न प्रवर्धते ॥

७ कुकूणक के लक्षण —

कुकूणकः क्षीरदोषाच्छिशूनामाक्षिवर्त्मनि ।
जायते तेन तन्नेत्रं कण्डुरं च स्रवेन्मुहुः ॥
शिशु कुर्याल्ललाटाक्षिकूटनासावघर्षणम् ।
शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलने क्षम. ॥

८ पक्ष्मार्श के लक्षण—

एर्वारुबीजप्रतिमा पिडका मन्दवेदनाः ।
श्लक्ष्णाः खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्यते ॥

९ पक्ष्मरोध (वर्त्मबन्ध) के लक्षण—

कण्डूमताल्पतोदेन वर्त्मशोथेन यो नरः ।
न स संछादयेदक्षि भवेद्बन्धः स वर्त्मनि ॥

१० पित्तोत्क्लिष्ट (पक्ष्मकोप) के लक्षण—

प्रचालितानि वातेन पक्ष्माण्यक्षि विशन्ति हि ।
घृष्यन्त्यक्षि मुहुस्तानि संरम्भं जनयन्ति च ॥
असिते सितभागे च मूलकोषात्पतन्ति हि ।
पक्ष्मकोपः स विज्ञेयो व्याधिः परमदारुणः ॥

११ पोथकी के लक्षण—

स्राविण्यः कण्डुरा गुर्व्यो रक्तसर्षपसन्निभाः ।
पिडकाश्च रुजावत्यः पोथिक्य इति ता. स्मृताः ॥

१२ क्लिष्टवर्त्म (अक्लिन्नवर्त्म)—

यस्य धौतान्यधौतानि सवध्यन्ते पुन पुन ।
वर्त्मान्यपरिपक्कानि विद्यादक्लिन्नवर्त्म तत् ॥

अन्य लक्षण—

मृद्वल्पवेदन ताम्र यद्वर्त्म सममेव च ।
अकस्माच्च भवेद्रक्त क्लिष्टवर्त्मेति तद्विदु ॥

१३ वहलवर्त्म—

वर्त्मोपचीयते यस्य पिडकाभि समन्तत. ।
सवर्णाभि स्थिराभिश्च विद्याद्वहुलवर्त्म तत् ॥

१४ पक्ष्मोत्सग के लक्षण—

अभ्यन्तरमुखी ताम्रा वाह्यतो वर्त्मनश्च या ।
सोत्सङ्गोत्सङ्गपिडका रक्तजा स्थूलकण्डुरा ॥

१५ पक्ष्मार्बुद के लक्षण—

वर्त्मान्तरस्थ विषमं ग्रन्थिभूतमवेदनम् ।
आचक्षतेऽर्बुदमिति सरक्तमविलम्बितम् ॥

१६ कुम्भिका के लक्षण—

वर्त्मान्ते पिडकाध्माता भिद्यन्ते च स्रवन्ति च ।
कुम्भीकावीजसदृशा कुम्भीका सन्निपातजाः ॥

१७ सिकतावर्त्म के लक्षण—

पिडकाभि सुसूक्ष्माभिर्घनाभिरभिसंवृता ।
पिडका या खरा स्थूला सा ज्ञेया वर्त्मशर्करा ॥

१८ लगण के लक्षण—

अपाकी कठिन स्थूलो ग्रन्थिर्वर्त्मभवोऽरुज ।
सकण्डु. पिच्छिल कोलप्रमाणो लगणस्तु स. ॥

१९ अञ्जनिका के लक्षण—

दाहतोदवती ताम्रा पिडका या तु वर्त्मजा ।
मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साऽञ्जननामिका ॥

२० कर्दमवर्त्म के लक्षण—

क्लिष्ट पुन पित्तयुतं शोणित विदहेद्यदा ।
ततः क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दम ॥

२१ श्याववर्त्म के लक्षण—

यद्वर्त्म वाह्यतोऽन्तश्च श्याव शूनं सवेदनम् ।
दाहकण्डूपरिक्लेदि श्याववर्त्मेति तन्मतम् ॥

२२ बिसवर्त्म के लक्षण—

त्रयो दोषा. बहि.शोथं कुर्युश्छिद्राणि वर्त्मनोः।
प्रस्रवन्त्यन्तरुदकं बिसवद्बिसवर्त्म तत् ॥

२३ अलजी के लक्षण—

वर्तुलाकारपिडका सूक्ष्मा ताम्रा च वर्त्मनि।
सरुजा शोणितोत्क्लिष्टा दारुणा त्वलजी स्मृता ॥

२४ उत्क्लिष्टवर्त्म (वातहतवर्त्म) के लक्षण—

विमुक्तसन्धि निश्चेष्टं वर्त्म यस्य न मील्यते।
एतद्वातहतं वर्त्म जानीयादक्षिचिन्तक. ॥

नेत्र सन्धिगतरोग—

**नेत्रसन्धिसमुद्भूता नव रोगाः प्रकीर्तिताः ॥१५७॥**
**जलस्रावः कफस्रावो रक्तस्रावश्च पर्वणी।**
**पूयस्रावः क्रिमिग्रन्थिरुपनाहस्तथाऽलजी ॥१५८॥**
**पूयालस इति प्रोक्ता रोगा नयनसन्धिजाः।**

नेत्रों की सन्धि में नौ रोग होते हैं। यथा—१—जलस्राव, २—कफस्राव, ३—रक्तस्राव, ४—पर्वणी, ५—पूयस्राव, ६—क्रिमिग्रन्थि, ७—उपनाह ८—अलजी, ९—पूयालस। इस प्रकार नेत्र संधि में नौ रोग होते हैं ॥१५७–१५८॥

इनके लक्षण इस प्रकार हैं—

वक्तव्य— १ जलस्राव के लक्षण—

हरिद्राभं नीलमुष्णं जलाभ पित्तात्स्राव. संस्रवेत्सन्धिमध्यात्।
अन्यच्च—गत्वा सन्धीनश्रुमार्गेण दोषाः कुर्युः स्रावान् लक्षणैः स्वैरुपेतान्।
तं हि स्रावं नेत्रनाडीमथैके तस्या लिङ्गं कीर्तयिष्ये चतुर्धा ॥

२ कफस्राव के लक्षण—

श्वेतं सान्द्रं पिच्छिलं य स्रवेत्तु श्लेष्मस्रावोऽसौ विकारो मतस्तु ॥

३ रक्तस्राव के लक्षण—

रक्तस्राव. शोणितोत्थो विकारः स्रवेद् दुष्टं तत्र रक्तं सपूयम् (प्रभूतम्) ॥

४ पर्वणी के लक्षण—

ताम्रा तन्वी दाहशूलोपपन्ना ज्ञेया रक्तात् पर्वणी वृत्तशोथा ॥

५ पूयस्राव के लक्षण—

पाकात् सन्धौ संस्रवेत् यस्तु पूयं पूयस्रावो नैकरूपः प्रदिष्ट. ॥

६ क्रिमिग्रन्थि के लक्षण—

क्रिमिग्रन्थिर्वर्त्मन. पक्ष्मणश्च कण्डूं कुर्यु क्रमय. सन्धिजाता।
नानारूपा वर्त्मशुक्लान्तसंधौ चरंत्यन्तर्लोचनं दूषयन्तः ॥

७ अलजी के लक्षण—

जाता सन्धौ कृष्णशुक्लेऽलजी स्यात् तस्मिन्नेव ख्यापिता पूर्वलिङ्गै ॥

८ पूयालस के लक्षण—

पक्व शोथ सन्धिजात सतोद पूयस्रावी सोऽत्र पूयालसाख्य ।

९ उपनाह के लक्षण—

ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकी कण्डूप्रायो नीरुजस्तूपनाह ॥

नेत्र के शुक्ल भाग के रोग—

तथा शुक्लगता रोगा बुधैः प्रोक्तास्त्रयोदश ॥ १५९ ॥
शिरोत्पातः शिराहर्षः शिराजालश्च शुक्तिका ।
शुक्लार्म चाधिमांसार्म प्रस्तार्यर्म च पिष्टकः ॥ १६० ॥
शिरायाश्चिप्पिटं चैव कफग्र(ग्रं)थितकोऽर्जुनः ।
स्नाय्वर्म शोणितार्म स्यादिति शुक्लगता गदाः ॥१६१॥

नेत्र के श्वेतभाग में होने वाले रोग तेरह होते हैं। यथा—१-शिरोत्पात, २—शिराहर्ष, ३—शिराजाल, ४—शुक्तिका, ५—शुक्लार्म, ६—अधिमासार्म, ७—प्रस्तारि अर्म, ८—पिष्टक, ९—शिराजपिटिका, १०—कफग्रन्थि, ११—अर्जुन, १२—स्नायुअर्म, १३—शोणितार्म । इस प्रकार शुक्ल भाग के तेरह रोग होते हैं। ॥१५९—१६१॥ इनके लक्षण इस प्रकार हैं—

वक्तव्य— १ शिरोत्पात के लक्षण—

अवेदना वाऽपि सवेदना वा यस्याक्षिराज्यो हि भवन्ति ताम्रा ।
मुहुर्विरज्यन्ति च या. स तादृग् व्याधि' शिरोत्पात इति प्रदिष्ट ॥

२ शिरा हर्ष के लक्षण—

मोहात् शिरोत्पात उपेक्षितस्तु जायेत रोग स शिराप्रहर्षः ।
ताम्राभमस्रं स्रवति प्रगाढ तथा न शक्नोत्यभिवीक्षितुं च ॥

३ शिराजाल के लक्षण—

जालाभ कठिनशिरो महान् सरक्त सन्तान स्मृत इह जालसंज्ञितस्तु ।

४ शुक्तिका के लक्षण—

श्यावा स्यु पिशितनिभाश्च विन्दवो ये शुक्तथाभा सितनियता. स शुक्तिसंज्ञ.॥

५ शुक्लार्म के लक्षण—

सश्वेत मृदु शुक्लार्म शुक्ले तद्वर्धते चिरात् ।

६ अधिमांसार्म के लक्षण—

पृथु मृद्वधिमांसार्म बहुलं वा यकृन्निभम् ।

७ प्रस्तारि अर्म के लक्षण—

प्रस्तार्यर्म तनुस्तीर्णं श्याव रक्तनिभं सिते ।

८ पिष्टक के लक्षण—

श्लेष्ममारुतकोपेन यच्छुक्ले मांसमुन्नतम् ।
पिष्टवत् पिष्टकं विद्धि मलाक्तादर्शसन्निभम् ॥

९ शिराज पिटिका के लक्षण—

शुक्लस्थाः सितपिडकाः शिरावृता या-
स्ता विद्यादसितसमीपजाः शिराजाः ॥

१० बलासग्रथित के लक्षण—

मारुतोत्पीडितः श्लेष्मा शुक्लभागे व्यवस्थितः ।
जलबिन्दुरिवोच्छूनोऽमृदुः शोफः समुद्भवेत् ॥
बलासग्रथितं नाम नीरुजं वृत्तमण्डलम् ॥

११ अर्जुन के लक्षण—

एको यः शशरुधिरोपमश्च बिन्दुः
शुक्लस्थो भवति तमर्जुनं वदन्ति ॥

१२ स्नाय्वर्म के लक्षण—

स्थिरं प्रस्तारि मांसाढ्यं शुष्कं स्नाय्वर्म पञ्चमम् ॥
अन्यत्र—प्रस्तारिणोऽर्मणः स्रावं निरुणद्धि यदाऽनिलः ।
विना स्रावं विशुष्कं तत् स्नाय्वर्मेति च तद्विदुः ॥

१३ अधिमांसार्म के लक्षण—

पद्माभं मृदु रक्ताभं यन्मांसं चीयते सिते ।
इस प्रकार शुक्ल भाग में होने वाले यह १३ रोग होते हैं ।

नेत्र के कृष्णभाग गत रोग—

**तथा कृष्णसमुद्भूताः पञ्च रोगाः प्रकीर्तिताः ।**
**शुद्धशुक्रं शिराशुक्रं क्षतशुक्रं तथाऽजका ॥ १६२ ॥**
**शिरासङ्गश्च सर्वेऽपि प्रोक्ताः कृष्णगता गदाः ।**

आंख के काले भाग में पांच रोग होते हैं । यथा—१—शुद्धशुक्र (फूला), २—शिराशुक्र, ३—क्षतशुक्र, ४—अजका, ५—सिरासंग । इस प्रकार नेत्र के कृष्ण भाग में ५ रोग होते हैं ॥ १६२ ॥

वक्तव्य— १ शुद्ध (अव्रण) शुक्र के लक्षण—

स्यन्दात्मकं कृष्णगतं सदो(चो)षं शङ्खेन्दुकुन्दप्रतिमावभासम् ।
वैहायसाभ्रप्रतिमप्रकाशमथाव्रणं साध्यतमं वदन्ति ॥

२ शिराशुक्र के लक्षण—

विच्छिन्नमध्यं पिशितावृतं वा चलं शिरासक्तमदृष्टिकृच्च
द्वित्वग्गतं लोहितमन्ततश्च चिरोत्थितं चाऽपि विवर्जनीयम् ॥

३ क्षत (सव्रण) शुक्र के लक्षण—

निमग्नरूप तु भवेद्धि कृष्णे सूच्येव विद्धं प्रतिभाति यद्वै ।
स्रावं स्रवेदुष्णमतीव यच्च तत् सव्रण शुक्रमुदाहरन्ति ॥

४ अजकाजात के लक्षण—

अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलास्र ।
विगृह्य कृष्णं प्रचयोऽभ्युपैति तच्चाजकाजातमिति व्यवस्येत् ॥

५ सिरासग (अक्षिपाकात्यय) के लक्षण—

श्वेत समाक्रामति सर्वतो हि दोषेण यस्यासितमण्डलं तु ।
तमक्षिपाकात्ययमक्षिरोगं सर्वात्मक वर्जयितव्यमाहुः ॥

काच रोग का वर्णन—

**काचं तु षड्विधं ज्ञेयं वातात्पित्तात्कफादपि ॥१६३॥**
**सन्निपाताच्च रक्ताच्च षष्ठं संसर्गसंभवम् ।**

काच रोग (मोतियाबिन्द) छ प्रकार का होता है । यथा—१—वातिक काच (काच मण्डल में वायु के लक्षणों का प्राधान्य), २—पैत्तिक काच, ३—श्लैष्मिक काच, ४—सन्निपातिक काच, ५—रक्तज काच, ६—ससर्गज काच । इस प्रकार काच रोग छ प्रकार का होता है ॥१६६॥

वक्तव्य— वातादि काचों के लक्षण—

रागोऽरुणो मारुतज प्रदिष्टो म्लायी च नीलश्च तथैव पित्तात् ।
कफात् सित शोणितज सरक्त समस्तदोषप्रभवो विचित्र ॥

तिमिर रोग का वर्णन—

**तिमिराणि षडेव स्युर्वातपित्तकफैस्त्रिधा ॥१६४॥**
**संसर्गेण च रक्तेन षष्ठं स्यात्सन्निपाततः ।**

तिमिर रोग (प्रथम से चतुर्थ पटल का मोतियाबिन्द) छ प्रकार का होता है । यथा—१—वातज तिमिर रोग, २—पित्तज तिमिर रोग, ३—कफज तिमिर रोग, ४—ससर्गज तिमिर रोग, ५—रक्तज तिमिर रोग, ६—सन्निपातज तिमिर रोग । इस प्रकार तिमिर रोग छ प्रकार का है ॥१६४॥

वक्तव्य—

मूल दृष्टिविनाशस्य तिमिर समुदाहृतम् ।
ऋषिभिस्त्वरितं तस्मात् तस्य कुर्याच्चिकित्सितम् ॥

१ वातिक तिमिर के लक्षण—

तत्र वातेन रूपाणि भ्रमन्तीव च पश्यति ।
अरुणाभानि कृष्णानि व्याविद्धानीव मानव ॥

२ पैत्तिक तिमिर के लक्षण—

पित्तेनादित्यखद्योतशक्रचापतडिद्‌गुणान् ।
नृत्यतश्चैव शिखिन सर्वं नीलं च पश्यति ॥

३ कफज तिमिर के लक्षण—

कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च ।
पश्येदसूक्ष्माण्यत्यर्थं व्यभ्रमेवाभ्रसंप्लवम् ॥
सलिलप्लावितानीव परिजाड्यानि मानव ।

४ ससर्गज (परिम्लायि) के लक्षण—

पित्तं कुर्यात् परिम्लायि मूर्च्छितं पित्ततेजसा ।
पीता दिशस्तु खद्योतान् भास्करं चापि पश्यति ॥
विकीर्यमाणान् खद्योतैर्वृक्षांस्तेजोभिरेव च ॥

५ रक्तज तिमिर के लक्षण—

पश्येद्रक्तानि रक्तेन विविधानि तमासि च ।
हरितान्यथ कृष्णानि पीतान्यपि च मानवः ॥

६ सन्निपातज तिमिर के लक्षण—

संनिपातेन चित्राणि विप्लुतानीव पश्यति ।
बहुधा च द्विधा वापि सर्वाण्येव समन्ततः ॥
हीनाधिकाङ्गान्यथवा ज्योतींष्यपि च मानवः ॥

लिङ्गनाश का वर्णन—

**लिङ्गनाशः सप्तधा स्याद् वातात्पित्तात्कफेन च ॥१६५॥**
**त्रिदोषैरुपसर्गेण संसर्गेणासृजा तथा ।**

लिगनाश (देखने की शक्ति का सर्वथा अभाव) रोग सात प्रकार का होता है। यथा—१—वातिक लिगनाश (इस रोग में भी दृष्टि मण्डल के ऊपर वातिक दोषों के लक्षण प्रकटीभूत होते हैं), २—पैत्तिक लिगनाश, ३—कफज लिगनाश, ४—त्रिदोषज लिगनाश, ५—उपसर्गज लिगनाश, ६—संसर्गज लिंगनाश, ७—रक्तज लिगनाश १६५॥

वक्तव्य—नेत्र भाग में जो विकृत दोष तिमिरादि की उत्पत्ति करता है वही दोष जब चतुर्थ पटल में पहुंचता है तब लिगनाश को उत्पन्न करता है। अतः एक ही व्याधि स्थान भेद से नामान्तर को प्राप्त हुई है। यदुक्तम्—

तिमिराख्यः स वै दोषः चतुर्थं पटलं गतः ।
रुणद्धि सर्वतो दृष्टिं लिङ्गनाशमतः परम् ॥
अस्मिन्नपि तमोभूते नातिरूढे महागदे ।
चन्द्रादित्यौ सनक्षत्रावन्तरिक्षे च विद्युतः ॥
निर्मलानि च तेजांसि भ्राजिष्णूनि च पश्यति ।

१ वातिक लिंगनाशीय मण्डल के लक्षण—

अरुणं मण्डलं वाताच्चञ्चलं परुषं तथा ।

२ पित्तज लिंगनाशीय मण्डल—

पित्ततो मण्डलं नीलं कांस्याभं पीतमेव च ।

३ कफज लिंगनाशीय मण्डल—

श्लेष्मणा बहुलं स्निग्धं शङ्खकुन्देन्दुपाण्डुरम् ।
चलत्पद्मपलाशस्थ शुक्लो बिन्दुरिवाम्भस ॥
संकुचत्यातपेऽत्यर्थं छायाया विसत्यपि ।
मृज्यमाने च नयने मण्डलं तद्विसर्पति ॥

४ रक्तज लिंगनाशीय मण्डल—

प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम् ।

५ त्रिदोष लिंगनाशीय मण्डल—

दृष्टिरागो भवेच्चित्रो लिङ्गनाशे त्रिदोषजे ॥

६ उपसर्गज (निमित्तज लिंगनाश)—

निमित्ततस्तत्र शिरोऽभितापाज्ज्ञेयस्त्वभिष्यन्दनिदर्शन स ।
विदीर्यते सीदति हीयते वा नृणामभीघातहता च दृष्टि ॥

७ ससर्गज (अनिमित्तज) लिंगनाश—

सुरर्षिगन्धर्वमहोरगाणा सन्दर्शनेनाऽपि च भास्करस्य ।
हन्येत दृष्टिर्मनुजस्य यस्य स लिंगनाशस्त्वनिमित्तसंज्ञ ।

दृष्टिरोग वर्णन—

अष्टधा दृष्टिरोगाः स्युस्तेषु पित्तविदग्धकम् ॥१६६॥
अम्लपित्तविदग्धं च तथैवोष्णविदग्धकम् ।
नकुलान्ध्यं धूसरान्ध्यं रात्र्यांध्यं ह्रस्वदृष्टिकः ॥१६७॥
गम्भीरदृष्टिरित्येते रोगा दृष्टिगताः स्मृताः ।

दृष्टिमण्डल में होने वाले रोग आठ होते हैं। यथा—१—पित्तविदग्ध दृष्टि, २—अम्लपित्तविदग्ध दृष्टि, ३—उष्णविदग्ध दृष्टि, ४—नकुलान्ध्य, ५—धूसरान्ध्य, ६—रात्र्यांध, ७—ह्रस्वदृष्टि, ८—गम्भीरिका ॥१६६—१६७॥

वक्तव्य—दृष्टिगत रोगों से मसूरार्धदलपरिमाण मण्डल से अभिप्राय है।

दृष्टिप्रमाणं तु सुश्रुतेनोक्तम् । तद्यथा—

मसूरदलमात्रं तु पंचभूतप्रसादजम् ।

अन्यच्च— पचभूतात्मिका दृष्टिर्मसूरार्धदलोन्मिता ।

१ पित्त विदग्ध दृष्टि के लक्षण—

पित्तेन दुष्टेन सदा तु दृष्टिः पीता भवेत् यस्य नरस्य किंचित् ।
पीतानि रूपाणि च मन्यते य स मानव पित्तविदग्धदृष्टि ॥

२ अम्लपित्त विदग्ध (दिवान्ध) के लक्षण—

प्राप्ते तृतीयं पटलं तु दोषे दिवा न पश्येत् निशि वीक्षते च ।

रात्रौ च शीतानुगृहीतदृष्टिः पित्ताल्पभावादपि तानि पश्येत् ॥

३ उष्णविदग्ध दृष्टि—

अत्युष्ण पदार्थों के सेवन अथवा अत्यूष्मा सहन करने से दृष्टिमें विकार उत्पन्न होता है जिससे दर्शनशक्तिमें विह्वलता तथा पित्त के लक्षण होते हैं उसको उष्णविदग्धदृष्टि कहते हैं। यह रोग प्राय धूपमें चलने अथवा अग्निके अधिक तापनेके कारण होता है अत आगन्तुक भी कहा जा सकता है।

४ नकुलान्ध्य के लक्षण—

विद्योतते यस्य नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत् ।
चित्राणि रूपाणि दिवा स पश्येत् स वै विकारो नकुलान्ध्यसंज्ञः ॥

५ धूसरान्ध्य (धूमदर्शी) के लक्षण—

शोकज्वरायासशिरोऽभितापैरभ्याहता यस्य नरस्य दृष्टिः ।
धूम्रांस्तथा पश्यति सर्वभावान् स धूमदर्शीति नरः प्रदिष्ट' ॥

६ रात्र्यन्ध्य के लक्षण—

त्रिषु स्थितोऽल्प· पटलेषु दोषो नक्तान्ध्यमापादयति प्रसह्य ।
दिवा स सूर्यानुगृहीतदृष्टिः पश्येत्तु रूपाणि कफाल्पभावात् ॥

७ ह्रस्वजाति के लक्षण—

स ह्रस्वजात्यो दिवसेषु कृच्छ्राद्ध्रस्वानि रूपाणि च यो न पश्येत् ।

८ गम्भीरिका के लक्षण—

दृष्टिर्विरूपा श्वसनोपसृष्टा संकुच्यतेऽभ्यन्तरतस्तु याति ।
रुजावगाढा च तमक्षिरोगं गम्भीरिकेति प्रवदन्ति तज्ज्ञा· ॥

अभिष्यन्द रोग वर्णन—

**अभिष्यन्दाश्च चत्वारो रक्ताद्दोषैस्त्रिभिस्तथा ॥१६८॥**

अभिष्यन्द (नेत्रों का दूखना अथवा आना) रोग चार प्रकार का होता है। यथा—१—रक्ताभिष्यन्द, २—वाताभिष्यन्द, ३—पित्ताभिष्यन्द, ४—कफाभिष्यन्द। इस प्रकार नेत्रों का दूखना चार प्रकार का होता है ॥१६८॥

वक्तव्य— १ वातज अभिष्यन्द के लक्षण—

निस्तोदनस्तम्भनरोमहर्षसंघर्षपारुष्यशिरोऽभितापाः ।
विशुष्कभाव शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति ॥

२ पैत्तिक अभिष्यन्द के लक्षण—

दाहप्रपाकौ शिशिराभिनन्दा धूमायनं बाष्पसमुच्छ्रयश्च ।
उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति ॥

३ कफज अभिष्यन्द के लक्षण—

उष्णाभिनन्दा गुरुताक्षिशोथः कण्डूपदेहावतिशीतता च ।
स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति ॥

४ रक्तज अभिष्यन्द के लक्षण—

ताम्राश्रुता लोहितनेत्रता च नाड्य समन्तादतिलोहिता च ।
पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति ॥

अधिमन्थरोग वर्णन—

चत्वारश्चाधिमन्थाः स्युर्वातपित्तकफास्रतः ॥

अधिमन्थ रोग (अभिष्यन्द की अगली अवस्था) चार प्रकार का होता है। यथा—१—वातिक अधिमन्थ, २—पैत्तिक अधिमन्थ, ३—कफज अधिमन्थ. ४—रक्तज अधिमन्थ।

वक्तव्य—अभिष्यन्द रोग की चिकित्सा न करने से अधिमन्थ रोग उत्पन्न होता है। प्रत्येक दोष के अभिष्यन्द में जो लक्षण होते हैं वही लक्षण अधिमन्थों में तीव्रतर हो जाते हैं। सामान्यतया अधिमन्थ में यह लक्षण होते हैं। यथा—

उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा।
शिरसोऽर्ध च तं विद्यादधिमन्थं स्वलक्षणै ॥

सर्वाक्षिरोग—

सर्वाक्षिरोगाश्चाष्टौस्युस्तेषु वातविपर्ययः ॥१६९॥
अल्पशोफोऽन्यतोवातस्तथा पाकात्ययः स्मृतः ।
शुष्काक्षिपाकश्च तथा शोफोऽध्युषित एव च ॥१७०॥
हताधिमन्थ इत्येते रोगाः सर्वाक्षिसम्भवाः ।

सम्पूर्ण नेत्रों में व्याप्त होकर आरम्भ होने वाले रोग सर्वाक्षिरोग कहलाते हैं। यह रोग आठ प्रकार के होते हैं। यथा—१—वातविपर्यय, २—अल्पशोथ, ३—अन्यतोवात, ४—पाकात्यय, ५—शुष्काक्षिपाक, ६—शोफ, ७—अध्युषित, ८—हताधिमन्थ। इस प्रकार यह आठ रोग आख के सब भागों को कष्टकारक होते हैं ॥ १६९—१७० ॥

वक्तव्य— १—वातविपर्यय के लक्षण—

वारंवारं च पर्येति भ्रुवौ नेत्रे च मारुत.।
रुजश्च विविधास्तीव्रा ज्ञेयो वातविपर्यय ॥

२—अल्पशोथ सशोथजनेत्रपाक) के लक्षण—

कण्डूपदेहाश्रुयुत पक्वोदुम्बरसन्निभ.।
संरम्भी पच्यते यस्तु नेत्रपाकः स शोथज. ॥

३—अन्यतोवात के लक्षण—

यस्यावटु कर्णशिरोहनुस्थो मन्यागतो वाप्यनिलोऽन्यतो वा।
कुर्याद्रुजं वै भ्रुवि लोचने च तमन्यतो वातमुदाहरन्ति ॥

४—पाकात्यय के लक्षण—

संच्छाद्यते श्वेतनिभेन सर्वं दोषेण यस्यासितमण्डलं तु ।
तमक्षिपाकात्ययमक्षिरोगं समुच्छ्रितं तीव्ररुजं वदन्ति ॥

५ शुष्काक्षिपाक के लक्षण—

यत्कूणितं दारुणरूक्षवर्त्म संदह्यते चाविलदर्शन यत् ।
सुदारुणं यत् प्रतिबोधने च शुष्काक्षिपाकोपहतं तदक्षि ॥

६ अध्युषित (अम्लाध्युषित)—

श्यावं लोहितपर्यन्तं सर्वं चाक्षि प्रपच्यते ।
सदाहशोथ सास्रावमम्लाध्युषितमम्लत ॥

७ हताधिमन्थ के लक्षण—

उपेक्षणादक्षि यदाधिमन्थो वातात्मक. सादयति प्रसह्य ।
रुजाभिरुग्राभिरसाध्य एष हताधिमन्थः खलु नाम रोगः ॥

अन्यच्च—अथवा शोषयेदक्षि क्षीणतेजोबलादयम् ।
तत्पद्ममिव संशुष्कमवसीदति लोचनम् ॥
हताधिमन्थं तं विद्यादसाध्यं वातकोपजम् ॥

षण्ढरोग वर्णन—

**पुंस्त्वदोषास्तु पञ्चैव प्रोक्तास्तत्रेर्ष्यकः स्मृतः ॥१७१॥**
**आसेक्यश्चैव कुम्भीकः सुगन्धिः षण्ढसंज्ञकः ।**

पुंस्त्वदोष ( शुक्रक्षय अथवा वीर्य की अल्पता के कारण होने वाली नपुंसकता ) पांच प्रकार के होते हैं। यथा—१—ईर्ष्यक ( जो दूसरों को मैथुन करते देखकर मैथुन में प्रवृत्त हो उसे 'ईर्ष्यक' कहते हैं। यदुक्तम्—'दृष्ट्वा व्यवायमन्येषा व्यवाये य प्रवर्तते। ईर्ष्यक स तु विज्ञेय सदा रोगविशारदैः'। इसी प्रकार के नपुंसकों को 'दृग्योनि' भी कहते हैं ), २—आसेक्य—( अपनी स्त्री की योनि को देखकर संकल्पपूर्वक मैथुन में प्रवृत्त होने वाले को 'आसेक्य' कहते हैं अथवा माता पिता के क्षीण रजवीर्य से उत्पन्न होनेवाले बालक (गर्भ) को आसेक्य कहते हैं। यदुक्तम्—

पित्रोरत्यल्पवीर्यत्वादासेक्यः पुरुषो भवेत् ।
स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम् ॥

ऐसे नपुंसकों को पुनरपि पुरुषसिंह बनने के लिये शुक्र-प्राश उत्तम औषध है। इसका दूसरा नाम 'मुखयोनि' है। ३—कुम्भिक ( जो पुरुष प्रथम अपनी गुदाभंजन कराकर चैतन्यता प्राप्त करके सम्यक्तया मैथुन में प्रवृत्त होता है उस को 'कुम्भिक' नपुसक कहते हैं। इस का दूसरा नाम 'गुदयोनि' भी कहा जाता है। यदुक्तम्—

'स्वे गुदेऽब्रह्मचर्याद्यः स्त्रीषु पुवत् प्रवर्तते' ।

इसकी उत्पत्ति शास्त्रकार इस प्रकार दर्शाते हैं—

'मातुर्व्यवायप्रतिमेन वक्त्री स्याद्बीजदौर्बल्यतया पितुश्च' ।

अन्यत्र— 'अरजस्का यदा नारी श्लेष्मलस्तु व्रजेदृतौ ।

अन्यासक्ता भवेत् प्रीतिर्जायते कुम्भिकस्तदा' ॥

४—सुगन्धि—जो पुरुष दुष्टयोनि में उत्पन्न हो, जिसको योनि और लिंग की गन्ध सूघने से ध्वजबल प्राप्त हो, उसको 'सुगन्धि' अथवा 'सौगन्धिक' कहते हैं। इसका पर्यायनाम 'नासायोनि' भी है ।

यदुक्तम्—यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः ।

स योनिशेफसोर्गन्धमाघ्राय लभते बलम् ॥

५—पण्ढ—जो पुरुष ऋतुमती स्त्री से मोहवश ऋतुकाल में स्वय नीचे और स्त्री को अपने ऊपर सुलाकर मैथुन करे। इस प्रकार के मैथुन से उत्पन्न होने वाले गर्भ से यदि (दुर्भाग्यवश) बालक हो तो वह बालक अपनी युवावस्था में स्वय नीचे पडकर स्त्री अथवा पुरुप को अपने ऊपर चढाकर मैथुन की लालसा को पूर्ण करने का प्रयत्न करता है । ऐसे पुरुप को पण्ढ कहते हैं । यदुक्तम्—

यो भार्यायामृतौ मोहादङ्गनेव प्रवर्तते ।

तत्र स्त्रीचेष्टिताकारो जायते पण्ढसंज्ञित. ॥

पण्ढजाति का नपुसक वीर्यरहित माना गया है । शेप जाति के नपुंसकों में न्यूनाधिक वीर्यस्थिति मानी गई है । यदुक्तम्—

आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा ।

सरेतसस्त्वमी ज्ञेया अशुक्र पण्ढसंज्ञित. ॥

शुक्रदोप—

**शुक्रदोपास्तथाष्टौ स्युर्वातात्पित्तात्कफेन च ॥१७२॥**

**कुणपं चास्रपित्ताभ्यां पूयाभं श्लेष्मपित्ततः ।**

**क्षीणं च वातपित्ताभ्यां ग्रन्थिलं श्लेष्मवाततः ॥१७३॥**

**मलाभं संनिपाताच्च शुक्रदोपा इतीरिताः ।**

शुक्रदोप (वीर्य विकार) आठ प्रकार के होते हैं। यथा—१—वातज शुक्रदोप, २—पित्तज शुक्रदोप, ३—कफज शुक्रदोप, ४—कुणप शुक्रदोप, यह रक्त और पित्त के दूपित होने से होता है, ५—पूयाभ, यह कफपित्त के दूपित होने से होता है, ६—क्षीण दोप, यह वात और पित्त के विगाड़ से होता है, ७—ग्रन्थिदोष, यह वायु और कफ के दूपित होने से होता है । ८—मलाभशुक्रदोप, यह तीनों दोपों के प्रकोप से जब शुक्र व्याप्त हो तब होता है । इस प्रकार शुक्र धातु के आठ दोप (रोग) होते हैं ॥१७२—१७३॥

स्त्रियों के आर्तवदोष—

**अथ स्त्रीरोगनामानि प्रोच्यन्ते पूर्वशास्त्रतः ॥१७४॥**

**अष्टावार्तवदोषाः स्युर्वातपित्तकफैस्त्रिधा ।**

**पूयाभं कुणपं ग्रन्थि क्षीणं मलसमं तथा ॥१७५॥**

स्त्रियों के आर्तव (मासान्त में ऋतुकाल पर प्रवृत्त होने वाला रुधिर) के रोगों के नाम जिन को पूर्वाचार्यों ने कहा है उन्हें कहते हैं। यह रोग सख्या में आठ होते हैं। यथा—१—वातिक आर्तवरोग, २—पैत्तिक आर्तवरोग, ३—कफज आर्तवरोग, ४—पूयाभ आर्तवरोग, ५—कुणप आर्तवरोग, ६—ग्रन्थ्याभ आर्तव रोग, ७—क्षीणार्तवरोग, ८—मलाभ आर्तवरोग। इस प्रकार आर्तवरोग आठ प्रकार के होते हैं ॥१७४—१७५॥

प्रदररोग वर्णन—

**तथा च रक्तप्रदरं चतुर्विधमुदाहृतम् ।**

**वातपित्तकफैस्त्रेधा चतुर्थं सन्निपाततः ॥१७६॥**

स्वभावत प्रवृत्त होने वाले रक्त (आर्तव) के चार दोष (रोग) होते हैं। यथा—१—वातिक प्रदररोग, २—पैत्तिक प्रदररोग, ३—कफज प्रदररोग, ४—सन्निपातज प्रदररोग। इस प्रकार आर्तव के ४ दोष होते हैं ॥१७६॥

वक्तव्य—अत्यधिक आर्तव की प्रवृत्ति को प्रदर कहते हैं। इस प्रवृत्ति में जिस दोष के लक्षणों का आधिक्य हो उसी दोष के नाम से इसका नाम होता है।

यदुक्तम्—तदेवातिप्रसङ्गेन प्रवृत्तमनृतावपि ।
असृग्दरं विजानीयादतोऽन्यद्रक्तलक्षणात् ॥

इसकी अधिक प्रवृत्ति में यह लक्षण होते हैं। यथा—

तस्यातिवृत्तौ दौर्वल्यं भ्रमो मूर्च्छा मदस्तृषा ।
दाह. प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः ॥

१—वातिक प्रदर के लक्षण—

रूक्षारुणं फेनिलमल्पमल्पं वातात्सतोदं पिशितोदकाभम् ॥

२—पैत्तिक प्रदर के लक्षण—

सपीतनीलासितरक्तमुष्णं पित्तार्तियुक्तं भृशवेगि पित्तात् ॥

३ कफज प्रदर के लक्षण—

आमं सपिच्छाप्रतिमं सपाण्डु पुलाकतोयप्रतिमं कफात्तु ॥

४ सन्निपातज प्रदर के लक्षण—

सक्षौद्रसर्पिर्हरितालवर्णं मज्जप्रकाशं कुणपं त्रिदोषात् ॥

योनिरोग वर्णन—

**विंशतिर्योनिरोगाः स्युर्वातात्पित्तात्कफादपि ।**

संनिपाताच्च रक्ताच्च लोहितक्षयतस्तथा ॥१७७॥
शुष्का च वामिनी चैव षण्ढी चान्तर्मुखी तथा ।
सूचीमुखी विप्लुता च जातघ्नी च परिप्लुता ॥१७८॥
उपप्लुता प्राक्चरणा महायोनिश्च कर्णिनी ।
स्यान्नन्दा चातिचरणा योनिरोगा इतीरिताः ॥१७९॥

योनि (गर्भाशय) के रोग वीस प्रकार के होते हैं । यथा—१—वातला योनि, २—पित्तला योनि, ३—श्लेष्मला योनि, ४—सन्निपातजा योनि, ५—रक्तजा योनि, ६—लोहितक्षया योनि, ७—शुष्का योनि, ८—वामिनी, ९—षण्ढी १०—अन्तर्मुखी ११—सूचीमुखी, १२—विप्लुता, १३—जातघ्नी, १४—परिप्लुतायोनि, १५—उपप्लुतायोनि, १६—प्राक्चरणायोनि, १७—महायोनि, १८—कर्णिनीयोनि, १९—नन्दायोनि, २०—अतिचरणा योनि । इस प्रकार योनि भाग में होने वाले वीस रोग होते हैं ॥१७७—१७९॥

वक्तव्य—ऊपर के जितने रोग लिखे गये हैं उन में से कई गर्भाशय के रोग हैं। आयुर्वेदज्ञों ने सामीप्यत्वेन गर्भाशय के रोगों को योनिरोग का नाम दे दिया है परन्तु प्राक्चरणा, अतिचरणादि रोग योनि के भी हैं इसलिये योनिरोग कहना असगत भी नहीं है । अब इन रोगों के पृथक् २ लक्षण लिखे जाते हैं। यथा—

१ वातला योनि के लक्षण—

वातला कर्कशा स्तब्धा शूलनिस्तोदपीडिता ।

२ पित्तला योनि के लक्षण—

अत्यर्थं पित्तला योनिर्दाहपाकज्वरान्विता ।

३ श्लेष्मला योनि के लक्षण—

श्लेष्मला पिच्छिला योनिः कण्डूग्रस्तातिशीतला ।

४ सन्निपातजा योनि के लक्षण—

सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा ।

५ रक्तजा योनि के लक्षण—

प्रस्रंसिनी स्रंसते तु क्षोभिता दुष्प्रजायिनी ॥

६ लोहितक्षया योनि के लक्षण—

सदाहं क्षीयते रक्तं यस्यां सा लोहितक्षया ॥

७ शुष्कायोनि के लक्षण—

शुष्का नष्टार्तवा कथिता ।
वन्ध्या नष्टार्तवां विद्याद्विप्लुतां नित्यवेदनाम् ॥

८ वामिनीयोनि के लक्षण—

सवातमुद्गिरेद्बीजं वामिनी रजसा युतम् ॥

९ षण्ढीयोनि के लक्षण—

**अनार्तवाऽस्तनी षण्ढी खरस्पर्शा च मैथुने ॥**

१० अन्तर्मुखी (अण्डली) योनि के लक्षण—

**अतिकायगृहीतायास्तरुण्यास्त्वण्डली भवेत् ॥**

११ सूचीमुखीयोनि के लक्षण—

**सूचीवक्त्रातिसंवृता ।**

१२ विप्लुता योनि के लक्षण—

**विप्लुतां नित्यवेदनाम् ।**

१३ जातघ्नी (पुत्रघ्नी) योनि के लक्षण—

**स्थितं स्थितं हन्ति गर्भं पुत्रघ्नी रक्तसङ्क्षयात् ॥**

१४ परिप्लुता योनि के लक्षण—

**परिप्लुतायां भवति ग्राम्यधर्मेण रुग् भृशम् ।**

१५ उपप्लुता (उदावर्ता)—

**सा फेनिलमुदावर्ता रजः कृच्छ्रेण मुञ्चति ॥**

१६ प्राक्चरणायोनि के लक्षण—

**मैथुनेऽचरणापूर्वं पुरुषादतिरिच्यते ॥**

१७ महायोनि के लक्षण—

**विवृता च महायोनिः सूचीवक्त्रातिसंवृता ।**

१८ कर्णिनी योनि के लक्षण—

**कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां च जायते ।**

१९ नन्दा (अत्यानन्दा) योनि के लक्षण—

**अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण गच्छति ॥**

२० अतिचरणायोनि के लक्षण—

**बहुशश्चातिचरणा तयोर्बीजं न विन्दति ॥**

इस प्रकार योनि और गर्भाशय में होने वाले यह बीस रोग होते हैं।

योनिकन्द रोग—

**चतुर्विधं योनिकन्दं वातपित्तकफैस्त्रिधा ॥१२०॥**
**चतुर्थं संनिपातेन—**

योनिकन्द (योनि में लकुच के आकार का मासपिण्डरूप कन्द उत्पन्न हो जाता है उसको योनिकन्द कहते हैं) रोग चार प्रकार का है। यथा—१—वातिक योनिकन्द, २—पैत्तिक योनिकन्द, ३—कफज योनिकन्द, ४—सन्निपातज योनिकन्द। इस प्रकार चार प्रकार का योनिकन्द रोग होता है।

वक्तव्य— १ वातिक योनिकन्द के लक्षण—

**रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्दिशेत् ।**

२ पित्तज योनिकन्द के लक्षण—

दाहरागज्वरकरं विद्यात् पित्तात्मक तु तम् ॥

३ कफज योनिकन्द के लक्षण—

नीलपुष्पप्रतीकाशं कण्डूमन्त कफात्मकम् ॥

४ त्रिदोषज योनिकन्द के लक्षण—

सर्वलिङ्गसमायुक्तं सन्निपातात्मक विदु. ॥

गर्भ के रोग—

—तथाष्टौ गर्भजा गदाः ॥१८०॥

उपविष्टकगर्भः स्यात्तथा नागोदरः स्मृतः ।
मक्कल्लो मूढगर्भश्च विष्कम्भो गूढगर्भकः ॥१८१॥
जरायुदोषो गर्भस्य पातश्चाष्टमकः स्मृतः ।

गर्भाशयस्थ रजवीर्य के सयोग से उत्पन्न होने वाले गर्भ के आठ रोग होते हैं। यथा—१—उपविष्टक गर्भ, २—नागोदर, ३—मक्कल्ल, ४—मूढगर्भ, ५—विष्कम्भ, ६—गूढगर्भ, ७—जरायुदोष, ८—गर्भपात। इस प्रकार आठ दोष गर्भ के होते हैं।

वक्तव्य—आचार्य ने मूढ (वक्रीभूत हुए) गर्भ के उपर्युक्त नाम दिये हैं परन्तु पूर्वाचार्यों द्वारा मूढगर्भ की गतियो के इन से भिन्न नाम भी प्रयुक्त हुए हैं। जैसे—'सकीलक' 'प्रतिखुर' आदि। अत इनके विस्तृत लक्षणादि अन्यत्र देखने चाहियें।

स्तनरोग वर्णन—

पञ्चैव स्तनरोगाः स्युर्वातात्पित्तात्कफादपि ॥१८२॥
सन्निपातात्क्षताच्चैव तथा स्तन्योद्भवा गदाः ।
बालरोगेषु कथिताः—

स्तन (दुग्धाशय) के रोग पाच होते हैं। यथा—१—वातिक स्तनरोग, २—पैत्तिक स्तनरोग, ३—कफज स्तनरोग, ४—सन्निपातज स्तनरोग, ५—क्षतज (अभिघातज) स्तनरोग। इस प्रकार स्तनरोग पाच प्रकार के होते हैं तथा स्त्रियों के स्तन्य (दूध) के रोग भी पाच ही होते हैं जो 'बालरोग' में कहे गये हैं ॥१८२॥

स्त्रीदोष—

—स्त्रीदोषाश्च त्रयः स्मृताः ॥१८३॥

अदत्तपुरुषोत्पन्नः सपत्नीविहितस्तथा ।
दैवाज्जातस्तृतीयस्तु—

स्त्रियों को (मानसिक) दु ख उत्पन्न करने वाले तीन दोष होते हैं। यथा—१—अदत्तपुरुषोत्पन्न, २—सपत्नीविहित, ३—दैविक। इस प्रकार तीन दोष (मानसिक रोग) स्त्रियों को होते हैं।

वक्तव्य—१—युवा स्त्री के हाव, भाव, कटाक्षादि के समझने की जिसे बुद्धि नहीं है तथा जो स्त्री की कामेच्छा को पूर्ण न कर सके एवं तत्सम्बन्धी चतुरता जिसके भाग्य में नहीं ऐसे पुरुष (पति) से जो मानसिक क्षोभ होता है। उसे 'अदक्षपुरुषोत्पन्न' दोष कहते हैं। २—एक स्त्री के होने पर जब पुरुष दूसरी पत्नी लाता है तब प्रथम स्त्री को सौत का दु:ख होता है। इस असहनीय क्लेश से जो दु ख होता है उसे 'सपत्नीविहित' दोष कहते हैं। ३—पति के मरण अथवा एक मात्र संतानादि नाश से उत्पन्न शोक और दु ख को 'दैविक' दोष कहते हैं।

प्रसूता के रोग—

—तथा च सूतिकागदाः ॥१८४॥
ज्वराद्यश्चिकित्स्यास्ते यथादोषं यथाबलम्।

गर्भिणी स्त्री के बालक उत्पन्न होने के पश्चात् (मिथ्याहार विहारादि से) जो ज्वरादिरोग होते हैं उन्हें 'सूतिका' रोग कहते हैं। इनकी चिकित्सा दोषों तथा बल के अनुसार करनी चाहिये ॥१८४॥

वक्तव्य— सूतिका रोगों के लक्षण—

ज्वरातिसारशोथाश्च शूलानाहबलक्षयाः।
तन्द्रारुचिप्रसेकाद्याः कफवातामयोद्भवाः॥
कृच्छ्रसाध्या हि ते रोगाः क्षीणमांसबलाग्नितः।
ते सर्वे सूतिकानाम्ना रोगास्ते चाप्युपद्रवाः।

अन्यत्र— अङ्गमर्दो ज्वरः कम्पः पिपासा गुरुगात्रता।
शोथः शूलातिसारौ च सूतिकारोगलक्षणम्॥

बालरोग वर्णन—

द्वाविंशतिर्बालरोगास्तेषु क्षीरालसास्त्रयः ॥१८५॥
वातात्पित्तात्कफाच्चैव दन्तोद्भेदश्चतुर्थकः।
दन्तघातो दन्तशब्दोऽकालदन्तोऽहिपूतनम् ॥१८६॥
मुखपाको मुखस्रावो गुदपाकोपशीर्षकौ।
पार्श्वारुणस्तालुकण्टो विच्छिन्नं पारिगर्भिकः ॥१८७॥
दौर्बल्यं गात्रशोषश्च शय्यामूत्रं कुकूणकः।
रोदनं चाजगल्ली स्यादिति द्वाविंशतिः स्मृताः ॥१८८॥

बालकों में होनेवाले रोग २२ हैं। उनमें से तीन रोग 'क्षीरालस' (वातादि दोषों से दूषित दूध पीने से) कहलाते हैं। यथा १—वातज क्षीरालस, २—पित्तज क्षीरालस, ३—कफज क्षीरालस, ४—दन्तोद्भेद, ५—दन्तघात, ६—दन्तशब्द, ७—अकालदन्त, ८—अहिपूतन, ९—मुखपाक, १०—मुखस्राव, ११—गुदपाक,

१२—उपशीर्षक, १३—पार्श्वारुण, १४—तालुकण्टक, १५—विच्छिन्न १६—पारिगर्भिक, १७—दौर्बल्य, १८—गात्रशोष १९—शय्यामूत्र, २०—कुकूणक, २१—रोदन, २२—अजगल्ली। इस प्रकार नामानुसार यह २२ रोग बालकों के होते हैं ॥१८५-१८८॥

वक्तव्य—उपरोक्त २२ रोग बालकों की त्रिविध स्थिति के अनुसार प्रदर्शित किये गये हैं। यथा १—क्षीराशी, २—क्षीरान्नाशी, ३—अन्नाशी। इस विधि से १६ वर्ष की आयु तक बालसंज्ञा रहती है। क्षीरालसीय रोगों के लक्षण इस प्रकार हैं।

१ वातज क्षीरालस के लक्षण—

वातदुष्टं शिशुः स्तन्यं पिबन् वातगदातुरः।
क्षामस्वरः कृशाङ्गः स्याद्बद्धविण्मूत्रमारुतः॥

२ पित्तज क्षीरालस के लक्षण—

स्विन्नो भिन्नमलो बालः कामलापाण्डुरोगवान्।
तृष्णालुरुष्णसर्वाङ्गः पित्तदुष्टं पयः पिबन्॥

३ कफज क्षीरालस के लक्षण—

कफदुष्टं पिबन् क्षीरं लालालुः श्लेष्मरोगवान्।
निद्रान्वितो जडः शूनवक्त्राक्षश्छर्दनः शिशुः॥

४ दन्तोद्भेद के लक्षण—

दन्तोद्भेदश्च रोगाणां सर्वेषामपि कारणम्।
विशेषाज्ज्वरविड्भेदकासच्छर्दिशिरोरुजम्॥

५ दन्तघात के लक्षण—

दन्तघात से दन्तपात का अभिप्राय है। यह दन्तघात दो प्रकार का होता है—एक तो अपने ठीक समय पर दांतों का टूटना, दूसरा अभिघातादि के कारण दांतों का गिरना। यह दोनों बालकों को दुःख का कारण होते हैं।

६ दन्तशब्द के लक्षण—

सुप्तावस्था में परस्पर दांतों के संघर्ष अथवा कटकट को 'दन्तशब्द' कहते हैं। यह अजीर्ण और उदर में क्रिमि होने के कारण होता है।

७ अकालदन्त के लक्षण—

उपर्युक्त समय के पूर्व अथवा पश्चात् दांतों का उत्पन्न होना 'अकालदन्त' कहलाता है। यह भी दुःखकारक होता है।

८ अहिपूतना के लक्षण—

शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत्।
स्विन्ने वाऽस्नाप्यमाने वा कण्डू रक्तकफोद्भवा॥
कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते।
एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम्॥

९ बालकों के मुख का पक जाना मुखपाक कहलाता है।

१० बालकों के मुख से अत्यधिक लार के बहने को मुखस्राव कहते हैं।

११ बालकों की गुदा पक जाने को गुदपाक कहते हैं।

१२ उपशीर्षक के लक्षण—कपाल रोगों के वर्णन में 'उपशीर्ष' का वर्णन किया जा चुका है। कई आचार्य महापद्म को ही उपशीर्ष रोग मानते हैं। यथा—

विसर्पस्तु शिशोः प्राणनाशनो वस्तिशीर्षजः।
पद्मवर्णो महापद्मो रोगो दोषत्रयोद्भव॥

१३ पार्श्वारुण के लक्षण—पार्श्वारुण भी महापद्म का ही भेद है। इसमें मुख, तालु तथा बाह्यत्वक् पद्मवर्ण की होती है।

१४ तालुकण्टक के लक्षण—

तालुमांसे कफः क्रुद्ध कुरुते तालुकण्टकम्॥

इससे शिर के ऊपर की खोपडी के तालु स्थान में गढ़ा सा हो जाता है।

१५ विच्छिन्न ( तालुपात ) के लक्षण—

तालुपातः स्तनद्वेष कृच्छ्रात्पान शकृद्द्रवम्।
तृडक्षिकण्ठास्यरुजा ग्रीवादुर्धरता वमिः॥

१६ पारिगर्भिक के लक्षण—

मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि।
कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः॥
युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिकम्॥

१७ दौर्बल्य के लक्षण—

इस रोग में बालक प्रतिदिन दुर्बल होता जाता है। उसके मुख की सुन्दर कान्ति नष्ट हो जाती है।

१८ गात्रशोष के लक्षण—

इस रोग में गात्र सूख जाते हैं परन्तु मुख की प्रभा में अधिक विकार नहीं आता। लोक में इस रोग को 'सूखा' या 'मसान' कहते हैं।

१९ शय्यामूत्र के लक्षण—

इस रोग में बालक अक्षीण होता हुआ भी रात को बिस्तरे पर मूत देता है। कभी २ यह रोग बडी अवस्था तक भी रहता है।

२० कुकूणक के लक्षण—

कुकूणकः क्षीरदोषात् शिशूनामक्षिवर्त्मनि।
जायते तेन तन्नेत्रं कण्डूरं च स्रवेन्मुहुः॥
शिशुः कुर्याल्ललाटाक्षिकूटनासावघर्षणम्।
शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षमः॥

२१ रोदन के लक्षण—

शिशु का अत्यधिक रोदन भी रोगज्ञापक होता है। यथा—

शिशोस्तीव्रामतीव्रां च रोदनाल्लक्षयेद्रुजाम् ।
स्रोतांस्यङ्गानि सन्धींश्च पश्येद्यत्नान्मुहुर्मुहुः ॥

२२ अजगल्ली के लक्षण—

स्निग्धा सवर्णा ग्रथिता नीरुजो मुद्गसन्निभा ।
कफवातोत्थिता ज्ञेया बालानामजगल्लिका: ॥

बालग्रह वर्णन—

तथा बालग्रहाः ख्याता द्वादशैव मुनीश्वरैः ।
स्कन्दग्रहो विशाखः स्यात्स्वग्रहश्च पितृग्रहः ॥१८६॥
नैगमेयग्रहस्तद्वच्छकुनिः शीतपूतना ।
मुखमण्डितिका तद्वत्पूतना चान्धपूतना ॥१६०॥
रेवती चैव संख्याता तथा स्याच्छुष्करेवती ।

बालग्रह १२ प्रकार के होते हैं। यथा—१—स्कन्दग्रह, २-विशाखसञ्ज्ञग्रह, ३-स्वग्रह, ४-पितृग्रह, ५-नैगमेयग्रह, ६-शकुनिग्रह, ७-शीतपूतनाग्रह, ८-मुखमण्डितिकाग्रह, ६-पूतनाग्रह, १०-अन्धपूतनाग्रह, ११-रेवतीग्रह, १२-शुष्करेवतीग्रह। इस प्रकार बालकों को दुःख देनेवाले यह १२ ग्रह मुनीश्वरों ने कहे हैं ॥१८६—१६०॥

वक्तव्य—शास्त्रकारों ने बालकों के अनेक लक्षणयुक्त रोगों को ग्रहों के नाम से पुकारा है। ऐसे अद्भुत लक्षणाकृतियुक्त रोगों को ग्रह नाम से सम्बोधन करना अयुक्त प्रतीत नहीं होता। प्राय ऐसे विचित्र रोग होते भी बालकों को ही हैं।

सामान्यग्रहजुष्ट बालक के लक्षण—

क्षणादुद्विजते बालः क्षणात् त्रस्यति रोदिति ।
नखैर्दन्तैर्दारयति धात्रीमात्मानमेव च ॥
ऊर्ध्वं निरीक्षते दन्तान् खादेत् कूजति जृम्भते ।
भ्रुवौ क्षिपति दन्तौष्ठ फेन वमति चासकृत् ॥
क्षामोऽति निशि जागर्ति शूनाक्षो भिन्नविद्स्वरः ।
मांसशोणितगन्धिश्च न चाश्नाति यथा पुरा ॥
सामान्य ग्रहजुष्टानां लक्षणं समुदाहृतम् ॥

ग्रहनामधेय रोगों की उत्पत्ति जिसका चरक ने वर्णन किया है यदि उस पर विचार और गूढ मनन किया जाये तो साधक इस परिणाम तक पहुचने में कुण्ठित नहीं होगा कि अन्तत आहार विहार की भ्रष्टता ही इनका मुख्य कारण होता है।

यदुक्तं चरके—

धात्रीमात्रोरात्मनश्चापचाराच्छौचभ्रष्टान् मङ्गलाचारहीनान् ।
कृत्स्नान् त्रस्तान् दुर्जनांस्ताडितांश्च पूजोहेतोर्हिंस्युरेते कुमारान् ॥

स्कन्दग्रहजुष्ट के लक्षण—

एकनेत्रस्य गात्रस्य स्रावः स्पन्दनकम्पनम् ।
ऊर्ध्वदृष्टथा निरीक्षेत वक्रास्यो रक्तगन्धिकः ॥
दन्तान् खादति वित्रस्तः स्तन्यं नैवाभिनन्दति ।
स्कन्दग्रहगृहीतानां बालानां चाल्परोदनम् ॥

स्वग्रह ( स्कन्दापस्मार ) के लक्षण—

नष्टसंज्ञो वमेत् फेन संज्ञावानतिरोदति ।
पूयशोणितगन्धित्वं स्कन्दापस्मारलक्षणम् ॥

नैगमेयग्रह के लक्षण—

छर्दिस्पन्दनकण्ठास्यशोषमूर्च्छाभिगन्धिताः ।
ऊर्ध्वं पश्येद्दशेद्दन्तान्नैगमेयं ग्रहं वदेत् ॥

शकुनिग्रह के लक्षण—

स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः स्रास्रावव्रणपरिपीडितः समन्
स्फोटैश्च प्रचिततनुः सदाहपाकैर्विज्ञेयो भवति शिशुः क्षतः शकु

५ शीतपूतना के लक्षण—

वेपते कासते क्षीणो नेत्ररोगो विगन्धता ।
छर्द्यतीसारयुक्तश्च शीतपूतनया शिशुः ॥

६ मुखमण्डितिका के लक्षण—

प्रसन्नवर्णवदनः शिराभिरभिसंवृतः ।
मूत्रगन्धिस्तु बह्वाशी मुखमण्डितिकाग्रही ॥

७ पूतनाग्रह जुष्ट के लक्षण—

अतीसारो ज्वरस्तृष्णा तिर्यक्प्रेक्षणरोदनम् ।
नष्टनिद्रस्तथोद्विग्नो ग्रस्तः पूतनया शिशुः ॥

८ अन्धपूतना के लक्षण—

छर्दिः कासो ज्वरस्तृष्णा वसागन्धोऽतिरोदनम् ।
स्तन्यद्वेषोऽतिसारश्च अन्धपूतनया शिशोः ॥

९ रेवतीग्रहजुष्ट के लक्षण—

व्रणैः स्फोटैश्चितं गात्रं पङ्कगन्धं स्रवेदसृक् ।
भिन्नवर्चा ज्वरी दाही रेवतीग्रहलक्षणम् ॥

पादरोग—

तथा चरणभेदास्तु वातरक्तादिकाश्च ये ॥ १६१ ॥

द्विचत्वारिंशदुक्तास्ते रोगेष्वेव मुनीश्वरैः ।

कई आचार्यों का मत है कि पाँओं में होने वाले वातरक्तादि (पाददाह, सुप्तिपाद, पादस्तम्भ आदि २) रोग ४२ प्रकार के होते हैं ॥ १६१ ॥

द्विषष्टिभेद—

द्विषष्टिर्दोषभेदाः स्युः सन्निपातादिकाश्च ये ॥ १६२ ॥
तेऽपि रोगेषु गणिताः पृथक् प्रोक्ता न ते क्वचित् ।

इसी प्रकार वात, पित्त, कफ—इन तीनों दोषों के तथा सन्निपात के जो ६२ भेद कहे हैं उनका भी पृथक् २ निर्देश नहीं किया । उन्हें भी रोगादिक में हीन मध्यावरादि भेद करके पृथक् २ जाने ॥ १६२ ॥

वक्तव्य—इनका पृथक्त्व इस प्रकार स्वीकार किया जाता है । तद्यथा—

द्व्युल्वणैकोल्वणैः षट् च हीनमध्याधिकाश्च षट् ।
समश्चैको विकाराणां सन्निपातात् त्रयोदश ॥

अन्यत्र—द्विषष्टिधा वन्दत्येते भूयिष्ठमिति निश्चयः ।
त्रय एव पृथग् दोषा द्विशो नवसमाधिकैः ॥
त्रयोदशाधिकैकद्विसममध्योल्वणैस्त्रिशः ।
पञ्चाशदेवं तु सह भवन्ति क्षयमागतैः ॥
क्षीणमध्याधिकक्षीणक्षीणवृद्धैस्तथाऽपरैः ।
द्वादशैव समाख्यातास्त्रयो दोषा द्विषष्टिधा ॥

पञ्चकर्मज रोग—

हीनमिथ्यातियोगानां भेदैः पंचदशोदिताः ॥१६३॥
पञ्चकर्मभवा रोगा रोगेष्वेव प्रकीर्तिताः ॥

वमन, विरेचन, निरूहण वस्ति, अनुवासन वस्ति और नस्यकर्म—इन पांच कर्मों में जिसका हीनयोग, मिथ्यायोग अथवा अतियोग होवे तो वे कर्म इन तीन कारणों से १५ प्रकार के रोगों को उत्पन्न करते हैं ॥१६३॥

स्नेहादि के मिथ्यादि योग से—

स्नेहस्वेदौ तथा धूमो गण्डूषोऽञ्जनतर्पणे ॥१६४॥
पीडा अष्टादशैतज्जास्ताश्च रोगेषु लक्षिताः ।

स्नेहपान, स्वेदविधि, धूमपान, गण्डूष, अञ्जन, तर्पण—इन छ कर्मों में से प्रत्येक के हीनयोग, मिथ्यायोग, अतियोग—इन तीनों कारणों करके १८ भेद होते हैं और उन से होनेवाले रोग भी सब उक्त रोगों में सगृहीत किये गये हैं ॥१६४॥

शीतादिजन्य रोग —

शीतोपद्रव एकः स्यादेकश्चोष्णोपतापकः ॥१६५॥

**शल्योपद्रव एकश्च क्षाराच्चैकः स्मृतस्तथा ।**

अत्यन्त शीत के योग से मनुष्य को ठंडक का उपद्रव होता है, एवं गरमी के अत्यधिक योग से मनुष्य को उष्णता का उपद्रव होता है तथा— शल्य (नख, केश, काटा, शस्त्र की नोक, हाड, सीग इत्यादि शल्य होते हैं) के एकदम शरीर में प्रविष्ट होने के कारण जो रोग होता है उसे शल्योपद्रव कहते हैं और तीक्ष्ण क्षारादि ( तेजाब ) के स्पर्श अथवा पान से होनेवाले रोग को क्षारोपद्रव कहते हैं। इस प्रकार चार प्रकार के औपद्रविक रोग होते हैं ॥१६५॥

विषरोग वर्णन—

**स्थावरं जङ्गमं चैव कृत्रिमं च त्रिधा विषम् ॥१६६॥**
**तेषां च कालकूटाद्यैर्नवधा स्थावरं विषम् ।**
**जङ्गमं बहुधा प्रोक्तं तत्र लूता भुजङ्गमाः ॥१६७॥**
**वृश्चिका मूषिकाः कीटाः प्रत्येकं ते चतुर्विधाः ।**
**दंष्ट्राविषं नखविषं बालशृङ्गास्थिभिस्तथा ॥१६८॥**
**मूत्रात्पुरीषाच्छुक्राच्च दृष्टेर्निश्वासतस्तथा ।**
**लालायाः स्पर्शतस्तद्वत्तथा शङ्काविषं मतम् ॥१६९॥**
**कृत्रिमं द्विविधं प्रोक्तं गरदूषीविभेदतः ।**
**सप्तधातुविषं ज्ञेयं तथा सप्तोपधातुजम् ॥२००॥**
**तथैवोपविषेभ्यश्च जातं सप्तविधं मतम् ।**
**दुष्टनीरविषं चैकं तथैकं दिग्धजं विषम् ॥२०१॥**
**कपिकच्छुभवा कण्डूर्दुष्टनीरभवा तथा ।**
**तथा सूरणकण्डूश्च शोथो भल्लातजस्तथा ॥२०२॥**

स्थावर (वानस्पतिक), जङ्गम (प्राणिज) और कृत्रिम—इन भेदों से विष (अत्युग्र प्राणनाशक द्रव्य) तीन प्रकार के होते हैं। इनमें से कालकूटादि (कालकूट, वत्सनाभ, शृङ्गिक, प्रदीपक, हालाहल, ब्रह्मपुत्र, शक्तुविष, हारिद्र, सौराष्ट्रिक) इस प्रकार यह नौ विष स्थावर कहलाते हैं।

जङ्गमविष—यह बहुत प्रकार के होते हैं। यथा:—लूता (एक प्रकार का कीट), साप, विच्छू, चूहा, कीडा इत्यादि। यह प्रत्येक ( जरायुजाण्डजादि भेद से ) चार प्रकार के होते हैं।

दंष्ट्राविष—अनेक जीव जन्तु ऐसे होते हैं जिनमें से कइयों के दाढ में विष होता है। कइयों के नखों में विष होता है। कइयों के बालों में विष होता है। कइयों के सीग में विष होता है। कइयों के अस्थि में विष होता है। कइयों के मूत्र में विष

होता है। कइयों की विष्ठा में विष होता है। कइयों के शुक्र में विष होता है। कइयों की दृष्टि में विष होता है। कइयों के निःश्वास में विष होता है। कइयों के लाला (लार) में विष होता है। कइयों के स्पर्शमात्र से ही विष प्रभाव होता है। एवं एक शंका विष भी होता है अर्थात् विष का सन्देह होने से ही विष के लक्षण प्रकट होने लग जाते हैं। इस सन्देहाभास को 'शंका विष' कहते हैं।

कृत्रिमविष—यह गरविष और दूषीविष के भेद से दो प्रकार का होता है।

यथा— गरविष—

सौभाग्यार्थं स्त्रियः स्वेदरजोनानाङ्गजान् मलान्।
शत्रुप्रयुक्ताश्च गरान् प्रयच्छन्त्यन्नमिश्रितान् ॥

दूषीविष—

दूषित देशकालान्नदिवास्वप्नैरभीक्ष्णशः ।
यस्मात्संदूषयेद्धातूंस्तस्मात् दूषीविषं स्मृतम् ॥

धातुविष—यह सात प्रकार का होता है अर्थात् सातों स्वर्णादि धातुओं का पृथक् पृथक् विष विष-लक्षणों को प्रकट करता है। धातुओं के विष को दूर करने के लिये ही उनका पृथक् २ शोधन विधान शास्त्र में वर्णन किया गया है।

उपधातुविष—स्वर्णादि सात धातुओं की सात ही उपधातुएं होती हैं। उनमें भी स्वल्पाल्प विषांश रहने के कारण उपधातुओं में भी विष रहता है और यह भी सात प्रकार का होता है।

नीरविष—दूषित जल विषैला होजाता है। इसके स्नान और पान से विष प्रभाव होता है। इसको नीरविष कहते हैं। इसका वर्णन सुश्रुत जी इस प्रकार करते हैं। यथा—

न पिबेत् पङ्कशैवालतृणपर्णाविलावृतम् ।
सूर्येन्दुपवनादृष्टमभिवृष्टं घनं गुरु ॥
फेनिलं जन्तुसंकीर्णं दन्तग्राह्यतिशैत्यतः ।
अनार्तवं च यद्दिव्यमार्त्तवं प्रथमं च यत् ।
लूतादिजन्तुविण्मूत्रविषमं श्लेष्मदूषितम् ॥

दिग्धजविष—विष में बुझाए हुए शस्त्रों से जो व्रण होते हैं एवं ज्वरादि उपद्रवों की उत्पत्ति होती है उसको 'दिग्धजविष' कहते हैं।

स्पर्शजविष—कौंच की फली के ऊपर के रोंगटों के स्पर्श से कण्डू होती है। दुष्ट जल के स्पर्श से और जिमीकन्द के छूजाने तथा भिलावा के वृक्ष के रुआ से तथा उसके फलों के तैल के स्पर्श से भी कण्डू, शोथ, ज्वरादिक विष के लक्षण प्रकट होते हैं। इसको स्पर्शज विषप्रभाव कहते हैं ॥१९९—२०२॥

चार प्रकार का मद—

मदश्चतुर्विधश्चान्यः पूगभङ्गासकोद्रवैः ।
चतुर्विधोऽन्यो द्रव्याणां फलत्वङ्मूलपत्रजः ॥२०३॥

सुपारी, भांग, बहेड़े की गुठली के भीतर की मिंगी और कोदों धान्य-इन चार पदार्थों से चार प्रकार का मद रोग उत्पन्न होता है तथा अन्य अनेकात्मक द्रव्यों (वनस्पतियों) के फल, त्वचा, मूल (जड़) और पत्तों से होने वाला मद भी चार प्रकार का होता है ॥२०३॥

उपसंहार—

**इति प्रसिद्धा गणिता ये किलोपद्रवा भुवि ।**
**असंख्याश्चापरे धातुमूलजीवादिसंभवाः ॥२०४॥**

**इति श्रीदामोदरसूनुना श्रीशार्ङ्गधरेण विरचितायां शार्ङ्गधरसंहितायां प्रथमखण्डे रोगगणना नाम सप्तमोऽध्यायः ॥७॥**

---

श्रीशार्ङ्गधराचार्य जी अन्त में कहते हैं कि पृथ्वी पर जो प्रसिद्ध २ उपद्रव (रोग) होते हैं उनकी गणना मैंने इस प्रकार की है तथा धातु (स्वर्णादिधातु एवं हरिताल मन शिलादि जनित विष), मूल (मूल, कंद, एवं वनस्पति, वृक्ष, वीरुध और औषधादि जनित विष), और जीव (सर्प, वृश्चिकादि जनित विष) आदियों से उत्पन्न होने वाले दूसरे असंख्य (बेशुमार) रोग वैद्य को अपनी पटुता से समझ लेने चाहियें ॥२०४॥

इति श्रीआयुर्वेदाचार्यकविराजहरदयालवैद्यवाचस्पतिकृताया शार्ङ्गधर-संहिताया रहस्यार्थप्रकाशिकाया भाषाटीकाया प्रथमखण्डे 'रोगगणना नाम' सप्तमोऽध्याय ॥७॥

**समाप्तश्चायं प्रथमः खण्डः।**

ओम्

# शार्ङ्गधरसंहिता

## रहस्यार्थप्रकाशिका-भाषाटीका-सहिता ।

## द्वितीयखण्डे प्रथमोऽध्यायः ।

चिकित्सक चूडामणि वैद्यवर शार्ङ्गधर ने पूर्वखण्डोक्त अनुक्रमणिका की प्रतिज्ञा के अनुसार "स्वरस. क्वाथफाण्टौ च" द्वितीय खण्ड के आरम्भ में ही स्वरस कल्पना कही है। यथा—

अथातः स्वरसः कल्कः क्वाथश्च हिमफाण्टकौ ।
ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम् ॥१॥

स्वरस, कल्क, क्वाथ, हिम, फाण्ट—इन पांचों को "पञ्चकषाय" कहते हैं। यह उत्तरोत्तर लघु (शीघ्रपाकी) होते हैं। यथा—स्वरस की अपेक्षा कल्क, कल्क की अपेक्षा क्वाथ, क्वाथ की अपेक्षा हिम और हिम की अपेक्षा फाण्ट हलका होता है ॥१॥

वक्तव्य—वैद्यवर शार्ङ्गधर ने पञ्चकषाय संग्रह में यावतीय पेय क्वाथ विधियों का संग्रह कर दिया है। इस से भिन्न अन्य कोई विधि अवशिष्ट नहीं है। आर्द्र और शुष्क प्रत्येक प्रकार के द्रव्य का सरलातिसरल शरीरोपयोगी विधान संग्रह करके सागर को गागर में बन्द कर दिया है।

स्वरस लक्षण—

अहताच्तत्क्षणाकृष्टाद्द्रव्यात्क्षुण्णात्समुद्धरेत् ।
वस्त्रनिष्पीडितो यः स रसः स्वरस उच्यते ॥२॥

---

१ स्वरस इति सद्यो रस । २ कल्को दृषदि पेषित । ३ क्वाथ क्वथित कषाय । ४ हिम इति शीतकषाय. । ५ फाण्ट इति जलप्लावितं चूर्णम् ।

तत्काल की उत्पाटित वनस्पति को भली प्रकार कूट कर वस्त्र द्वारा निष्पीडन (निचोड़न) करने से जो रस प्राप्त हो उसे स्वरस कहते हैं ॥२॥

वक्तव्य—ऊपर के श्लोक में 'अहतात्' पाठ है और कहीं कहीं 'आहतात्' भी मिलता है। 'अहतात्' से ग्रन्थकार का अभिप्राय—

वल्मीककुत्सितानूपश्मशानोषरमार्गजाः ।
जन्तुवह्निहिमव्याप्ता नौषध्यः कार्यसिद्धिदाः ॥

से है। जो किसी प्रकार से हत या क्षत विक्षत न हो, ऐसे शुभ लक्षणों युक्त वनस्पति को ही स्वरसार्थ ग्रहण करना योग्य है। अथवा—अहतात् न हतम् अहतं तस्मात् कृम्यवस्यादिभिरदूषितात्, कृम्यादिदूषितस्य भेषजस्य कल्पे निषेधात्। दूसरे पाठ में 'आहतात्' का अभिप्राय 'आहतात् क्षतात् शकलीकृतात्। शस्त्रादिना छिन्नादित्यर्थः'। आहतं स्यात्कृतीयाते आहतं ताडितेऽपि चेति विश्वकोष। अर्थात् स्वरस निष्पीडन करने योग्य औषध के छोटे छोटे टुकड़े करके पुनः उसे कुट्टन करे। उलूखल में डालकर निष्पीडन करने योग्य बना ले।

विधि—जिस वनस्पति का स्वरस निकालना हो, उसे शास्त्रानुमोदित विधि से ग्रहण करके सब से प्रथम उसे स्वच्छ जल से प्रक्षालन करे। तत्पश्चात् शिला, खरल, दौरोहंडा या काष्ठ निर्मित चट्टू को जल से स्वच्छ करके वनस्पति को छोटे छोटे टुकड़ों में काटकर उसमें डाल दे और शनैः शनैः कूटकर बारीक होने पर स्वच्छ वस्त्र खण्ड में डालकर रस निचोड़ ले। यह स्वरस मृत्पात्र या शीशे के पात्र अथवा अभाव में कलईदार बर्तन में ग्रहण करना चाहिये।

स्वरस की दूसरी विधि—

**कुडवं चूर्णितं द्रव्यं क्षिप्तं च द्विगुणे जले ।**
**अहोरात्रं स्थितं तस्माद्भवेद्वा रस उत्तमः ॥३॥**

एक कुडव ऽ=१ तोला (१६ तोले) चूर्ण किये हुए वानस्पतिक द्रव्य को ३२ तोला जल (परिस्रुत अथवा इसके अभाव में त्रिपादावशेष क्वथित जल लेना चाहिये) डालकर दोनों पदार्थों को मिट्टी के पात्र में एक अहोरात्र (२४ घंटा) पर्यन्त ढांप कर रख दे। इस प्रकार प्राप्त होने वाले रस को भी स्वरस कहते हैं ॥३॥

२४ घंटा के पश्चात् अर्थात् दूसरे दिन प्रातःकाल स्वरस निकालने से प्रथम अंगुलियों द्वारा जलांतर्गत चूर्ण को भली प्रकार मर्दन करके वस्त्र द्वारा छान कर प्रयोग करे।

स्वरस की तीसरी विधि—

**आदाय शुष्कद्रव्यं वा स्वरसानामसंभवे ।**
**जलेऽष्टगुणिते साध्यं पादशेषं च गृह्यते ॥४॥**

स्वरस निकालने योग्य आर्द्र द्रव्यों के अभाव में शुष्क द्रव्य को ही सम्यक्

कूटकर आठ गुने जल में पका कर चौथा भाग शेष रहने पर उतार ले और पूर्वानुसार मर्दन करके वस्त्र द्वारा छान कर प्रयोग करे ॥४॥

पेय स्वरस की मात्रा—

**स्वरसस्य गुरुत्वाच्च पलमर्धं प्रयोजयेत् ।**
**निशोषितं चाग्निसिद्धं पलमात्रं रसं पिबेत् ॥५॥**

स्वरस, गुरु (गुरुपाकी भारी) होने से २ तोला प्रयोज्य है और निशोषित (रात्रिस्थापित) तथा अग्निसिद्ध रस (क्वाथ) स्वरसापेक्षा लघु होने के कारण १ पल (४ तोले) प्रयोग करे ॥५॥

वक्तव्य—स्वरस की दूसरी और तीसरी विधि के अनुसार हिम और क्वाथ में गोलमाल उत्पन्न होता है । कारण कि हिम और क्वाथ की भी यही विधियां हैं । इस सशय छेदन के लिये आचार्यो का निर्णय यह है कि दूसरी और तीसरी दोनो विधियों में जल और वस्तु का परिमाण भिन्न भिन्न होने के कारण विधि की एकता वाधक नही है ।

स्वरस में प्रक्षेप का परिमाण—

**मधुश्वेतागुडक्षाराञ्जीरकं लवणं तथा ।**
**घृतं तैलं च चूर्णादीन्कोलमात्रान् रसे क्षिपेत् ॥६॥**

मधु, खांड, गुड़, क्षार (यवक्षारादि) जीरक, सैंधव, गोघृत, तैल (तिल, एरण्डादि), चूर्ण त्रिकटु, त्रिफला प्रभृति—ये स्वरस की एक पेयमात्रा में १ कोल (६ माशा) डालकर पान करे ॥६॥

वक्तव्य—मध्विति—सामान्यग्रहणेन तज्जातयोऽष्टौ गृह्यन्ते ।
तद्यथा—पौतिकं भ्रामरं क्षौद्रं माक्षिक छात्रमेव च ।
आर्घ्यमौद्दालक दालमित्यष्टौ मधुजातय· ॥ इति

एवमविशेषोक्तौ सर्वत्र । श्वेता सितशर्करा । क्षारानिति वहुवचनेन सर्वे क्षारा·, अनुक्ते यवक्षारमेव सर्वत्र । जीरकं प्रसिद्धम् । अविशेषे श्वेतजीरकमेव । लवणमपि सामान्येन पञ्चलवणानि गृह्यन्ते । तद्यथा—'सिन्धुसौवर्चलोपेतं विडं सामुद्रजोद्भिदम्' इति । अनुक्ते सैन्धवमेव ग्राह्यं सर्वत्र । घृततैलं पक्वापक्व नानाविधम् । तत्र अनुक्ते तु गव्यं घृतं तिलतैलं च प्रधानमिति । तथाहि—'घृतेषु गोघृत श्रेष्ठ तैलेषु तिलजं तथा' इति । चूर्णादीनिति व्योषचूर्णादीन् आदिग्रहणेन क्षारमूत्रारिष्टशुक्तादयो रोगापेक्षया गृह्यन्ते । यद्वा गुटिकावलेहादयोऽप्यादिशब्देन ग्राह्या· । (गू० दी०)

स्वरसों का रोगानुसार प्रयोग, अमृतादि और धात्र्यादि स्वरस प्रमेह पर—

**अमृताया रसः क्षौद्रयुक्तः सर्वप्रमेहजित् ।**
**हरिद्राचूर्णयुक्तो वा रसो धात्र्याः समाक्षिकः ॥७॥**

गिलोय का स्वरस, क्षौद्र (रक्तवर्ण का शहद) मिलाकर पान करने से सर्व प्रमेह (बीस प्रकार के प्रमेह) दूर होते हैं। एव आमलकी स्वरस में हरिद्राचूर्ण और मधु मिलाकर पीने से भी सम्पूर्ण प्रमेह नष्ट होते हैं ॥७॥

वक्तव्य—पानार्थ गुडूची रस २ तोला मधु ६ माशा। यह एकमात्रा का मान है। गुडूची के काण्ड पर पतली सफेद रंग की त्वक् (झिल्ली) होती है। उसे कूटने से प्रथम चाकू से खुरच कर साफ कर लेना चाहिये। यह स्वरस वातश्लेष्म प्रधान प्रमेह पर अधिक लाभकारक है।

दूसरे योग में भी यही परिभाषा है। आमलकी रस २ तोला, हरिद्राचूर्ण ६ माशा, मधु ६ माशा। इन सबको मिलाकर पान करे। यह पित्त प्रधान प्रमेह में विशेष गुणप्रद है। मात्रा का यह साधारण नियम है। योग्य चिकित्सक को औषधमात्रा में रोगी के बल और व्याधि की तारतम्यावस्था के अनुसार, परिवर्तन करने का पूर्ण अधिकार है।

वासकादि स्वरस रक्तपित्तादि पर—

वासकः स्वरसः पेयो मधुना रक्तपित्तजित्।
ज्वरकासक्षयहरः कामलाश्लेष्मपित्तहा ॥८॥

वासा के स्वरस में मधु मिलाकर पीने से रक्तपित्त, ज्वर, कास, क्षय, (राजयक्ष्मा) कामला (पीलिया रोग) और श्लेष्मपित्त से होने वाले रोग नष्ट होते हैं ॥८॥

वक्तव्य—वासा के पत्रों में जलीयांश स्वल्प होने के कारण इनसे स्वरस नहीं निकलता। एतदर्थ इसके पत्रों को कूटते समय थोड़ा सा जल इसमें मिला दिया जाता है। अथवा किसी मृत्पात्र में पत्तों को ढापकर किञ्चित् अग्निदान से स्वेदित करके निष्पीडन द्वारा स्वरस प्राप्त कर लिया जाता है। अथवा पत्रों को पुटपाक विधि से पकाकर भी स्वरस प्राप्त किया जाता है। पुटपाक की विस्तृत विधि पुटपाक प्रकरण में देखो ॥८॥

त्रिफलादिस्वरस कामला रोग पर—

त्रिफलाया रसः क्षौद्रयुक्तो दार्वीरसोऽथ वा।
निम्बस्य वा गुडूच्या वा पीतो जयति कामलाम् ॥९॥

त्रिफला, दारुहलदी, निम्बत्वक् और गुडूची—इनमें से किसी एक के स्वरस में मधु मिलाकर पीने से कामला (पीलिया) रोग नष्ट होता है। विधि और मात्रा का मान ऊपर दिया गया है ॥९॥

तुलसी और द्रोणपुष्पी स्वरस विषमज्वर पर—

पीतो मरिचचूर्णेन तुलसीपत्रजो रसः।
द्रोणपुष्पीरसो वाऽपि निहन्ति विषमज्वरान् ॥१०॥

तुलसी के पत्तों का रस अथवा द्रोणपुष्पी (गूमा-मलभेड्डु) के पत्तों का स्वरस-

इन दोनों में से किसी एक के स्वरस में मरिचचूर्ण (कालीमिरच) मिलाकर पीने से विमसज्वर (मलेरिया बुखार) नष्ट होता है ।

वक्तव्य—तुलसी और द्रोणपुष्पी का स्वरस तीक्ष्ण और कटूष्ण होने के कारण एक मात्रा में १ तोला और मरिचचूर्ण १ माशा प्रयुक्त करना सुखकर होता है। यह योग ज्वरवेग से पूर्व प्रयोग करने से ज्वर को रोकता है और अविसर्गी विषम ज्वरों में प्रयुक्त होने से यह ज्वर को घटाकर क्षुधाबोध कराता है ।

जम्वादि स्वरस रक्तातिसार पर—

**जम्ब्वाम्रामलकीनां च पल्लवोत्थो रसो जयेत् ।**
**मध्वाज्यक्षीरसंयुक्तो रक्तातीसारमुल्बणम् ॥११॥**

जामुन, आम, आमलकी—इनके पत्तों का स्वरस मधु, गोघृत और गोदूध (६।६ माशा) मिलाकर पीने से अत्यन्त बढा हुआ रक्तातिसार (रुधिरान्वित शौच) शान्त होता है ॥११॥

वक्तव्य—इन उपरोक्त वृक्षों के पत्तों का स्वरस भी वासा स्वरस की सदृश प्राप्त होता है। रक्तातिसार दूर करने के लिये उपरोक्त पत्तों का स्वरस पुटपाक द्वारा प्राप्त करना श्रेयस्कर होता है। यह योग संकोचक है। अत उसी अवस्था में इसका प्रयोग विधेय है जब आममल की समाप्ति का ठीक परिज्ञान हो जाय ।

बब्बूलदलादि स्वरस सम्पूर्ण अतिसारों पर—

**स्थूलबब्बूलिकापत्ररसः पानाद् व्यपोहति ।**
**सर्वातिसारान् श्योनाककुटजत्वग्रसोऽथ वा ॥१२॥**

पुराने कीकर के वृक्ष के पत्तों का स्वरस (२ तोला) पीने से समस्त अतिसार दूर होते हैं। अथवा श्योनाक ( अरलू ) और कुटज (कूडा) के वृक्ष की त्वचा से पुटपाक द्वारा प्राप्त स्वरस (२ तोला) पीने से सर्व प्रकार के अतिसार दूर होते हैं॥१२॥

वक्तव्य—आमरहित पक्वातिसार दूर करने में श्योनाक और कुटजत्वक्-रस मधुमिश्रित पीने से निश्चय लाभ होता है। यह योग शतशोऽनुभूत है ।

आर्द्रक स्वरस वृषणवात और श्वास पर ।

**आर्द्रकस्वरसः क्षौद्रयुक्तो वृषणवातनुत् ।**
**श्वासकासारुचीर्हन्ति प्रतिश्यायं व्यपोहति ॥१३॥**

अदरख का (१ तोला) स्वरस, (६ माशे) मधु मिलाकर पीने ते वृषणवात (वातिक अण्डवृद्धि एवं उससे होने वाली अन्य व्यथाएं) और श्वास, कास, अरुचि तथा प्रतिश्याय नष्ट होते हैं ।

बिजोरे निम्बु का रस पार्श्वशूलादि पर—

**बीजपूररसः पानान्मधुक्षारयुतो जयेत् ।**
**पार्श्वहृद्वस्तिशूलानि कोष्ठवायुं च दारुणम् ॥१४॥**

